# श्रीकृष्णस्तोत्रं इन्द्ररचितम्

श्रीगणेशाय नमः ।
इन्द्र उवाच ।
अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् ।
गुणातीतं निराकारं स्वेच्छामयमनन्तजम् ॥ १॥

भक्तध्यानाय सेवायै नानारूपधरं वरम् ।
शुक्लरक्तपीतश्यामं युगानुक्रमणेन च ॥ २॥

शुक्लतेजःस्वरूपं च सत्ये सत्यस्वरूपिणम् ।
त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा ॥ ३॥

द्वापरे पीतवर्णं च शोभितं पीतवाससा ।
कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥ ४॥

नवधाराधरोत्कृष्टश्यामसुन्दरविग्रहम् ।
नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुम् ॥ ५॥

गोपिकाचेतनहरं राधाप्राणाधिकं परम् ।
विनोदमुरलीशब्दं कुर्वन्तं कौतुकेन च ॥ ६॥

रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् ।
कन्दर्पकोटिसौन्दर्यं विभ्रतं शान्तमीश्वरम् ॥ ७॥

क्रीडन्तं राधया सार्धं वृन्दारण्ये च कुत्रचित् ।
कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम् ॥ ८॥

जलक्रीडां प्रकुर्वन्तं राधया सह कुत्रचित् ।
राधिकाकबरीभारं कुर्वन्तं कुत्रचिद्वने ॥ ९॥

कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम् ।
राधार्चवितताम्बूलं गृह्णन्तं कुत्रचिन्मुदा ॥ १०॥

पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा ।
दत्तवन्तं च राधायै कृत्वा मालां च कुत्रचित् ॥ ११॥

कुत्रचिद्राधया सार्धं गच्छन्तं रासमण्डलम् ।

राधादत्तां गले मालां धृतवन्तं च कुत्रचित् ॥ १२॥

सार्धं गोपालिकाभिश्च विहरन्तं च कुत्रचित् ।
राधां गृहीत्वा गच्छन्तं तां विहाय च कुत्रचित् ॥ १३॥

विप्रपत्नीदत्तमन्नं भुक्तवन्तं च कुत्रचित् ।
भुक्तवन्तं तालफलं बालकैः सह कुत्रचित् ॥ १४॥

वस्त्रं गोपालिकानां च हरन्तं कुत्रचिन्मुदा ।
गवां गणं व्याहरन्तं कुत्रचिद्बालकैः सह ॥ १५॥

कालीयमूर्ध्नि पादाब्जं दत्तवन्तं च कुत्रचित् ।
विनोदमुरलीशब्दं कुर्वन्तं कुत्रचिन्मुदा ॥ १६॥

गायन्तं रम्यसङ्गीतं कुत्रचिद्बालकैः सह ।
स्तुत्वा शक्रः स्तवेन्द्रेण प्रणनाम हरिं भिया ॥ १७॥

पुरा दत्तेन गुरुणा रणे वृत्रासुरेण च ।
कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते ॥ १८॥

एकादशाक्षरो मन्त्रः कवचं सर्वलक्षणम् ।
दत्तमेतत्कुमाराय पुष्करे ब्रह्मणा पुरा ॥ १९॥

तेन चाङ्गिरसे दत्तं गुरवेऽङ्गिरसा मुने ।
इदमिन्द्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ २०॥

इह प्राप्य दृढां भक्तिमन्ते दास्यं लभेद्ध्रुवम् ।
जन्ममृत्युजराव्याधिशोकेभ्यो मुच्यते नरः ॥ २१॥

न हि पश्यति स्वप्नेऽपि यमदूतं यमालयम् ॥ २२॥

॥ इति श्रीब्रह्मवैवर्ते इन्द्रकृतं श्रीकृष्णस्तोत्रं समाप्तम् ॥

॥ ज्वरकृतकृष्णस्तोत्रम् ॥
श्रीगणेशाय नमः ॥

विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ।
अभ्यपद्यत दाशार्हं दहन्निव दिशो दश ।
अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ १॥

माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ।
माहेश्वरः समाक्रन्दन्वैष्णवेन बलार्दितः ॥ २॥

अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरोज्वरः ।
शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः ॥ ३॥

ज्वर उवाच ॥

नमामि त्वाऽनन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ।
विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ ४॥

कालो दैवं कर्म जीवःस्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ।
तत्सङ्घातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ ५॥

नानाभावैर्लीलयैवोपपन्नैर्देवान्साधूँल्लोकसेतून् बिभर्षि ।
हंस्युन्मार्गान्हिंसया वर्तमानान् जन्मैतत्ते भारहाराय भूमेः ॥ ६॥

तप्तोऽहं ते तेजसा दुःसहेन शीतोग्रेणात्युल्बणेन ज्वरेण ।
तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः ॥ ७॥

श्रीभगवानुवाच ।
त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद्भयम् ।
यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम्  ॥ ८॥

इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ॥

बाणास्तु रथमारूढः प्रागाद्योत्स्यन् जनार्दनम् ॥ ९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरर्धे त्रिषष्टितमोअध्याये

॥ श्रीकृष्णस्तोत्रं ब्रह्मवैवर्तपुराणे धर्मकृतम् ॥

श्रीधर्म उवाच ।

कृष्णं विष्णुं वासुदेवं परमात्मानमीश्वरम् ।
गोविन्दं पर्मानन्दमेकमक्षरमच्युतम् ॥ १॥

गोपेश्वरं च गोपीशं गोपं गोरक्षकं विभुम् ।
गवामीशं च गोष्ठस्थं गोवत्सपुच्छधारिण्म् ॥ २॥

गोगोपगोपीमध्यस्थं प्रधानं पुरुषोत्तमम् ।
वन्देऽनवद्धमनघं श्यामं शान्तं मनोहरम् ॥ ३॥

इत्युच्चार्य समुत्तिष्ठन् रत्नसिंहासने वरे ।
ब्रह्मविष्णुमहेशांस्तान्संभाष्य स उवास ह ॥ ४॥

चतुर्विंशतिनामानि धर्मवक्त्रोद्गतानि च ।
यः पठेत्प्रातरुत्थाय स सुखी सर्वतो जयी ॥ ५॥

मृत्युकाले हरेनमि तस्य साध्यं भवेद्ध्रुवम् ।
स यात्यन्ते हरेः स्थानं हरिदास्यं भवेद्ध्रुवम् ॥ ६॥

नित्यं धर्मस्तं घटते नाधर्मे तद्रतिर्भवेत् ।
चतुर्वर्गफलं तस्य शश्वत्करगतं भवेत् ॥ ७॥

तं दृष्ट्वा सर्वपापानि पलायन्ते भयेन च ।
भयानि चैव दुःखानि वैनतेयमिवोरेगाः ॥ ८॥

इति ब्रह्मावैवर्ते धर्मकृतं श्रीकृष्णस्तोत्रम् ।

॥ श्रीकृष्णस्तोत्रं श्रीनारदरचितम् ॥

श्री गणेशाय नमः ।
वन्दे नवघनश्यामं पीतकौशेयवाससम् ।
सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परम् ॥ १॥

राधेशं राधिकाप्राणवल्लभं बल्लवीसुतम् ।
राधासेवितपादाब्जं राधावक्षःस्थलस्थितम् ॥ २॥

राधानुगं राधिकेष्टं राधापहृतमानसम् ।
राधाधारं भवाधारं सर्वाधारं नमामि तम् ॥ ३॥

राधाहृत्पद्ममध्ये च वसन्तं सन्ततं शुभम् ।
राधासहचरं शश्वद्राधाज्ञापरिपालकम् ॥ ४॥

ध्यायन्ते योगिनो योगान् सिद्धाः सिद्धेश्वराश्च यम् ।
तं ध्यायेत् सततं शुद्धं भगवन्तं सनातनम् ॥ ५॥

सेवन्ते सततं सन्तो ब्रह्मेशशेषसञ्ज्ञकाः ।
सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनम् ॥ ६॥

निर्लिप्तं च निरीहं च परमात्मानमीश्वरम् ।
नित्यं सत्यं च परमं भगवन्तं सनातनम् ॥ ७॥

यं सृष्टेरादिभूतं च सर्वबीजं परात्परम् ।
योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ॥ ८॥

बीजं नानावताराणां सर्वकारणकारणम् ।
वेदावेद्यं वेदबीजं वेदकारणकारणम् ॥ ९॥

योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ।
इत्येवमुक्त्वा गन्धर्वः पपात धरणीतले ॥ १०॥

नमाम दण्डवद् भूमौ देवदेवं परात्परम् ।
इति तेन कृतं स्तोत्रं यः पठेत् प्रयतः शुचिः ॥ ११॥

इहैव जीवन्मुक्तश्च परं याति परां गतिम् ।
हरिभक्तिं हरेर्दास्यं गोलोके च निरामयः ॥ १२॥

पार्षदप्रवरत्वं च लभते नाऽत्र संशयः ॥ १३॥

॥ इति नारदपञ्चरात्रे कृष्णस्तोत्रं सम्पूर्णम् ॥

॥ श्रीकृष्णस्तोत्रं ब्रह्मवैवर्तपुराणे नारायणकृतम् ॥

नारायण उवाच ।

वरं वरेण्यं वरदं वरार्हं वरकारणम् ।
कारणं कारणानां च कर्म तत्कर्मकारणम् ॥ १॥

तपस्तत्फलदं शश्वत्तपस्वीशं च तापसम् ।
वन्दे नवघनश्यामं स्वात्मारामं मनोहरम् ॥ २॥

निष्कामं कामरूपं च कामघ्नं कामकारणम् ।
सर्वे सर्वेश्वरं सर्वबीजरूपमनुत्तमम् ॥ ३॥

वेदरूपं वेदबीजं वेदोक्तफलदं फलम् ।
वेदज्ञं तद्विधानं च सर्ववेदविदां वरम् ॥ ४॥

इत्युक्त्वा भक्तियुक्तश्च स उवास तदाज्ञया ।
रत्नसिंहासने रम्ये पुरतः परमात्मनः ॥ ५॥

नारायणकृतं स्तोत्रं यः पठेत्सुसमाहितः ।
त्रिसंध्यं यः पठेन्नित्यं पापं तस्य न विधते ॥ ६॥

पुत्रार्थी लभते पुत्रं भार्यार्थी लभते प्रियाम् ।
भ्रष्टराज्यो लभेद्राज्यं धनं भ्रष्टधनो लभेत् ॥ ७॥

कारागारे विपद्ग्रस्तः स्तोत्रेनानेन मुच्यते ।
रोगात्प्रमुच्यते रोगी वर्ष श्रुत्वा च संयतः ॥ ८॥

इति ब्रह्मावैवर्ते नारायणकृतं श्रीकृष्णस्तोत्रम् ।

# श्रीकृष्णस्तोत्रं बालकृतम् अथवा दावानल संहरण स्तोत्रम्

बाला ऊचुः -
यथा सुरक्षित ब्रह्मन् सर्वापत्स्वेव नः कुलम् ।
तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥ १॥

त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता ।
स्रष्टा पाता च संहर्ता जगतां च जगत्पते ॥ २॥

वह्निर्वा वरूणो वाऽपि चन्द्रो वा सूर्य एव च ।
नमः कुबेरः पवन ईशानाद्याश्च देवता ॥ ३॥

ब्रह्मेश-शेष-धर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः ।
मानवाश्च तथा दैत्या यक्ष-राक्षस-किन्नराः ॥ ४॥

ये ये चराऽचराश्चैव सर्वे तव विभूतयः ।
आविर्भावस्तिरोभावः सर्वेषां च तवेच्छया ॥ ५॥

अभयं देहि गोविंद वह्निसंहरणं कुरु ।
वयं त्वां शरणं यामो रक्ष नः शरणागतान् ॥ ६॥

इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम् ।
दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः ॥ ७॥

दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः ।
सर्वापदः प्रणश्यन्ति हरिस्मरणमात्रतः ॥ ८॥

इदं स्तोत्रं महापुण्यं प्रातरूत्थाय यः पठेत् ।
वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥ ९॥

शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसंकटे ।
स्तोत्रमेतत् पठित्वा तु मुच्यते नाऽत्र संशयः ॥ १०॥

शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् ।
इह लोके हरेर्भक्तिमन्ते दास्यं लभेध्रुवम् ॥ ११॥

॥ इति श्रीब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे बालकृतं
कृष्णस्तोत्रं अथवा दावानल संहरण स्तोत्रम् सम्पूर्णम् ॥

॥ श्रीकृष्णस्तोत्रं ब्रह्मवैवर्तपुराणे ब्रह्मकृतम् ॥

ब्रह्मोवाच

कृष्णं वन्दे गुणातीतं गोविन्दमेकमक्षरम्
अव्यक्तमव्ययं व्यक्तं गोपवेषविधायिनम् ॥ १॥

किशोरवयसं शान्तं गोपीकान्तं मनोहरम् ।
नवीननीरदश्यामं कोटिकन्दर्पसुन्दरम् ॥ २॥

वृन्दावनवनाभ्यर्णे रासमण्डलसंस्थितम् ।
रासेश्वरं रासवासं रासोल्लाससमुत्सुकम् ॥ ३॥

इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे ।
नारायणेशौ संभाष्य स उवास तदाज्ञया ॥ ४॥

इति ब्रह्माकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
पापानि तस्य नश्यन्ति दुःस्वप्नः सुस्वप्नो भवेत् ॥ ५॥

भक्तिर्भवति गोविन्दे श्रीपुत्रपौत्रवर्धिनी ।
अकीर्तिः क्षयमाप्नोति सत्कीर्तिर्वर्धते चिरम् ॥ ६॥

इति ब्रह्मावैवर्ते ब्रह्माकृतं श्रीकृष्णस्तोत्रम् ।

॥ श्रीकृष्णस्तोत्र ब्रह्मारचित ॥

श्री गणेशाय नमः ।
ब्रह्मोवाच ।
रक्ष रक्ष हरे मां च निमग्नं कामसागरे ।
दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसङ्कटे ॥ १॥

भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे ।
अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥ २॥

जन्मोर्मिसङ्गसहिते योषिन्नक्रौधसङ्कुले ।
रतिस्रोतःसमायुक्ते गम्भीरे घोर एव च ॥ ३॥

प्रथमामृतरूपे च परिणामविषालये ।
यमालयप्रवेशाय मुक्तिद्वारातिविस्मृतौ ॥ ४॥

बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् ।
स्वयं च त्व कर्णधारः प्रसीद मधुसूदन ॥ ५॥

मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि ।
सन्ति विश्वेश विधयो हे विश्वेश्वर माधव ॥ ६॥

न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः ।
तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके ॥ ७॥

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु ।
त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८॥

इत्युक्त्वा जगतां धाता विरराम सनातनः ।
ध्यायं ध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ९॥

ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ।
स चैवाकर्मविषये न निमग्नो भवेद्ध्रुवम् ॥ १०॥

मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम् ।
इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ११॥

॥ इति श्रीब्रह्मदेवकृतं श्रीकृष्णस्तोत्रं सम्पूर्णम् ॥

॥ श्रीकृष्णस्तोत्रम् श्रीमहादेवकृतम् ॥

श्रीमहादेव उवाच -
परं ब्रह्म परं धाम परं ज्योतिः सनातनम् ।
निर्लिप्तं परमात्मानं नमाम्यखिलकारणम् ॥ १॥

स्थूलात्स्थूलतमं देवं सूक्ष्यात्सूक्ष्यतमं परम् ।
सर्वदृश्यमदृश्यं च स्वेच्छाचारं नमाम्यहम् ॥ २॥

साकारं च निराकारं सगुणं निर्गुणं प्रभुम् ।
सर्वाधारं च सर्वं च स्वेच्छारूपं नमाम्यहम् ॥ ३॥

अतीव कमनीयं च रूपं निरुपमं विभुम् ।
करालरूपमत्यन्तं बिभ्रतं प्रणमाम्यहम् ॥ ४॥

कर्मणः कर्मरूपं तं साक्षिणं सर्वकर्मणः ।
फलं च फलदातारं सर्वरूपं नमाम्यहम् ॥ ५॥

स्रष्टा पाता च संहर्ता कलया मूर्तिभेदतः ।
नानामूर्तिः कलांशेन यः पुमांस्तं नमाम्यहम् ॥ ६॥

स्वयं प्रकृतिरूपश्च मायया च स्वयं पुमान् ।
तयोः परं स्वयं शश्वत्तन्नमामि परात्परम् ॥ ७॥

स्त्रीपुन्नपुंसकं रूपं यो बिभर्ति स्वमायया ।
स्वयं माया स्वयं मायी यो देवस्तं नमाम्यहम् ॥ ८॥

तारकं सर्वदुःखानां सर्वकारणकारणम् ।
धारकं सर्वविश्वानां सर्वबीजं नमाम्यहम् ॥ ९॥

तेजस्विनां रविर्यो हि सर्वजातिषु वाडवः ।
नक्षत्राणां च यश्चन्द्रस्तं नमामि जगत्प्रभुम् ॥ १०॥

रुद्राणां वैष्णवानां च ज्ञानिनां यो हि शङ्करः ।
नागानां यो हि शेषश्च तं नमामि जगत्पतिम् ॥ ११॥

प्रजापतीनां यो ब्रह्मा सिद्धानां कपिलः स्वयम् ।
सनत्कुमारो मुनिषु तं नमामि जगद्गुरुम् ॥ १२॥

देवानां यो हि विष्णुश्च देवीनां प्रकृतिः स्वयम् ।
स्वायम्भुवो मनूनां यो मानवेषु वैष्णवः ।
नारीणां शतरूपा च बहुरूपं नमाम्यहम् ॥ १३॥

ऋतूनां यो वसन्तश्च मासानां मार्गशीर्षकः ।
एकादशी तिथीनां च नमाम्यखिलरूपिणम् ॥ १४॥

सागरः सरितां यश्च पर्वतानां हिमालयः ।
वसुन्धरा सहिष्णूनां तं सर्वं प्रणमाम्यहम् ॥ १५॥

पत्राणां तुलसीपत्रं दारुरूपेषु चन्दनम् ।
वृक्षाणां कल्पवृक्षो यस्तं नमामि जगत्पतिम् ॥ १६॥

पुष्पाणां पारिजातश्च सस्यानां धान्यमेव च ।
अमृतं भक्ष्यवस्तुनां नानारूपं नमाम्यहम् ॥ १७॥

ऐरावतो गजेन्द्राणां वैनतेयश्च पक्षिणाम् ।
कामधेनुश्च धेनूनां सर्वरूपं नमाम्यहम् ॥ १८॥

तैजसानां सुवर्णं च धान्यानां यव एव च ।
यः केसरी पशूनां च वररूपं नमाम्यहम् ॥ १९॥

यक्षाणां च कुबेरो यो ग्रहाणां च बृहस्पतिः ।
दिक्पालानां महेन्द्रश्च तं नमामि परं वरम् ॥ २०॥

वेदसङ्घश्च शास्त्राणां पण्डितानां सरस्वती ।
अक्षराणामकारो यस्तं प्रधानं नमाम्यहम् ॥ २१॥

मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जाह्नवी स्वयम् ।
इन्द्रियाणां मनो यो हि सर्वश्रेष्ठं नमाम्यहम् ॥ २२॥

सुदर्शनं च शस्त्राणां व्याधिनां वैष्णवो ज्वरः ।
तेजसां ब्रह्मतेजश्च वरेण्यं तं नमाम्यहम् ॥ २३॥

बलं यो वै बलवतां मनो वै शीघ्रगामिनाम् ।
कालः कलयतां यो हि तं नमामि विलक्षणम् ॥ २४॥

ज्ञानदाता गुरूणां च मातृरूपश्च बन्धुषु ।
मित्रेषु जन्मदाता यस्तं सारं प्रणमाम्यहम् ॥ २५॥

शिल्पिनां विश्वकर्मा यः कामदेवश्च रूपिणाम् ।
पतिव्रता च पत्नीनां नमस्यं तं नमाम्यहम् ॥ २६॥

प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च ।
शालग्रामश्च यन्त्राणां तं विशिष्टं नमाम्यहम् ॥ २७॥

धर्मः कल्याणबीजानां वेदानां सामवेदकः ।
धर्माणां सत्यरूपो यो विशिष्टं तं नमाम्यहम् ॥ २८॥

जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु ।
शब्दरूपश्च गगने तं प्रणम्यं नमाम्यहम् ॥ २९॥

क्रतूनां राजसूयो यो गायत्री छन्दसां च यः ।
गन्धर्वाणां चित्ररथस्तं गरिष्ठं नमाम्यहम् ॥ ३०॥

क्षीरस्वरूपो गव्यानां पवित्राणां च पावकः ।
पुण्यदानां च यः स्तोत्रं तं नमामि शुभप्रदम् ॥ ३१॥

तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम् ।
गुणानां शान्तरूपो यश्चित्ररूपं नमाम्यहम् ॥ ३२॥

तेजोरूपो ज्ञानरूपः सर्वरूपश्च यो महान् ।
सर्वानिर्वचनीयं च तं नमामि स्वयं विभुम् ॥ ३३॥

सर्वाधारेषु यो वायुर्यथाऽऽत्मा नित्यरूपिणाम् ।
आकाशो व्यापकानां यो व्यापकं तं नमाम्यहम् ॥ ३४॥

वेदानिवर्चनीयं यन्न स्तोतुं पण्डितः क्षमः ।
यदनिर्वचनीयं च को वा तत्स्तोतुमीश्वरः । ३५॥

वेदा न शक्ता यं स्तोतुं जडीभूता सरस्वती ।
तं च वाङ्मनसापारं को विद्वान्स्तोतुमीश्वरः ॥ ३६॥

शुद्धतेजस्स्वरूपं च भक्ताऽनुग्रहविग्रहम् ।
अतीव कमनीयं च श्यामरूपं नमाम्यहम् ॥ ३७॥

द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा ।
शश्वद्गोपाङ्गनाभिश्च वीक्ष्यमाणं नमाम्यहम् ॥ ३८॥

राधया दत्तताम्बूलं भुक्तवन्तं मनोहरम् ।
रत्नसिंहासनस्थं च तमीशं प्रणमाम्यहम् ॥ ३९॥

रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः ।
पार्षदप्रवरैर्गोपकुमारैस्तं नमाम्यहम् ॥ ४०॥

वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम् ।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥ ४१॥

शतशृङ्गे महाशैले गोलोके रत्नपर्वते ।
विरजापुलिने रम्ये प्रणमामि विहारिणम् ॥ ४२॥

परिपूर्णतमं शान्तं राधाकान्तं मनोहरम् ।
सत्यं ब्रह्मस्वरूपं च नित्यं कृष्णं नमाम्यहम् ॥ ४३॥

॥ फलश्रुतिः ॥

श्रीकृष्णस्य स्तोत्रमिदं त्रिसन्ध्यं यः पठेन्नरः ।
धर्मार्थकाममोक्षाणां स दाता भारते भवेत् ॥ ४४॥

हरिदास्यं हरौ भक्तिं लभेत्स्तोत्रप्रसादतः ।
इह लोके जगत्पूज्यो विष्णुतुल्यो भवेद्ध्रुवम् ॥ ४५॥

सर्वसिद्धेश्वरः शान्तोऽप्यन्ते याति हरेः पदम् ।
तेजसा यशसा भाति यथा सूर्यो महीतले ॥ ४६॥

जीवन्मुक्तः कृष्णभक्तः स भवेन्नात्र संशयः ।
अरोगी गुणवान्विद्वान्पुत्रवान्धनवान्सदा ॥ ४७॥

षडभिज्ञो दशबलो मनोमायी भवेद्ध्रुवम् ।
सर्वज्ञः सर्वदश्चैव स दाता सर्वसम्पदाम् ॥ ४८॥

कल्पवृक्षसमः शश्वद्भवेत्कृष्णप्रसादतः ।
इत्येवं कथितं स्तोत्रं वत्स त्वं गच्छ पुष्करम् ॥ ४९॥

तत्र कृत्वा मन्त्रसिद्धिं पश्चात्प्राप्स्यसि वाञ्छितम् ।
त्रिस्सप्तकृत्वो निर्भूपां कुरु पृथ्वीं यथासुखम् ।
ममाऽऽशिषा मुनिश्रेष्ठ श्रीकृष्णस्य प्रसादतः ॥ ५०॥

॥ इति श्रीब्रह्मवैवर्ते महापुराणे तृतीये गणपतिखण्डे
नारदनारायणसंवादे स्तवप्रदानं नाम
द्वात्रिंशतमोऽध्याये श्रीकृष्णस्तोत्रं सम्पूर्णम् ॥

॥ श्रीकृष्णस्तोत्रं मोहिनीरचितम् ॥

श्री गणेशाय नमः ।
मोहिन्युवाच ।
सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम् ।
तदेव कर्मणां बीजं तदुद्भव नमोऽस्तु ते ॥ १॥

स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः ।
नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ २॥

सर्वाजित जगज्जेतर्जीवजीव मनोहर ।
रतिबीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते ॥ ३॥

शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय ।
योषिद्वाहन योषास्त्र योषिद्बन्धो नमोऽस्तु ते ॥ ४॥

पतिसाध्यकराशेषरूपाधार गुणाश्रय ।
सुगन्धिवातसचिव मधुमित्र नमोऽस्तु ते ॥ ५॥

शश्वद्योनिकृताधार स्त्रीसन्दर्शनवर्धन ।
विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते ॥ ६॥

अकृपा येषु तेऽनर्थं तेषां ज्ञानं विनाशनम् ।
अनूहरूपभक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ ७॥

तपस्विनां च तपसां विघ्नबीजाय लीलया ।
मनः सकामं मुक्तानां कर्तुं शक्तं नमोऽस्तु ते ॥ ८॥

तपःसाध्यस्तथाऽऽराध्यः सदैवं पाञ्चभौतिकः ।
पञ्चेन्द्रियकृताधार पञ्चबाण नमोऽस्तु ते ॥ ९॥

मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः ।
विरराम नम्रवक्त्रा बभूव ध्यानतत्परा ॥ १०॥

उक्तं माध्यन्दिने कान्ते स्तोत्रमेतन्मनोहरम् ।
पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने ॥ ११॥

स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् ।

अभीष्टं लभते नूनं निष्कलङ्को भवेद् ध्रुवम् ॥ १२॥

चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् ।
भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः ।
वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ १३॥

॥ इति श्रीमोहिनीकृतं कृष्णस्तोत्रं समाप्तम् ॥

॥ श्रीकृष्णस्तोत्रं वसुदेवकृतं ब्रह्मवैवर्तपुराणान्तर्गतम् ॥

श्री गणेशाय नमः ।
वसुदेव उवाच --
त्वामतीन्द्रियमव्यक्तमक्षरं निर्गुणं विभुम् ।
ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥ १॥

स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् ।
निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ॥ २॥

स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्ममदर्शनम् ।
स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ३॥

शरीरवन्तं सगुणमशरीरं गुणोत्करं ।
प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम् ॥ ४॥

सर्वेशं सर्वरूपं च सर्वान्तकरमव्ययम् ।
सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥ ५॥

अनन्तः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती ।
यं वा स्तोतुमशक्तश्च पञ्चवक्त्रः षडाननः ॥ ६॥

चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा ।
गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ ७॥

ऋषयो देवताश्चैव मुनीन्द्रमनुमानवाः ।
स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवन्ति ते ॥ ८॥

श्रुतयः स्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः ।
विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९॥

वसुदेवकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे ॥ १०॥

विशिष्टं पुत्रं लभते हरिदासं गुणान्वितम् ।
सङ्कटं निस्तरेत्तूर्णं शत्रुभीतेः प्रमुच्यते ॥ ११॥

॥ इति श्री ब्रह्मवैवर्तमहापुराणे वसुदेवकृतं
श्रीकृष्णस्तोत्रं सम्पूर्णम् ॥

॥ श्रीकृष्णस्तोत्रं विप्रपत्नीकृतम् ॥

श्रीगणेशाय नमः ।
विप्रपत्न्य ऊचुः ।
त्वं ब्रह्म परमं धाम निरीहो निरहङ्कृतिः ।
निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥ १॥

साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः ।
प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥ २॥

सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः स्मृताः ।
ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥ ३॥

यस्य लोम्नां च विवरे चाऽखिलं विश्वमीश्वरः ।
महाविराड्महाविष्णुस्त्वं तस्य जनको विभो ॥ ४॥

तेजस्त्वं चाऽपि तेजस्वी ज्ञानं ज्ञानी च तत्परः ।
वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ ५॥

महदादि सृष्टिसूत्रं पञ्चतन्मात्रमेव च ।
बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥ ६॥

सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा ।
त्वमनीहः स्वयञ्ज्योतिः सर्वानन्दः सनातनः ॥ ७॥

अहोऽप्याकारहीनस्त्वं सर्वविग्रहवानपि ।
सर्वेन्द्रियाणां विषयं जानासि नेन्द्रियी भवान् ॥ ८॥

सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे ।
जडीभूतो महेशश्च शेषो धर्मो विधिः स्वयम् ॥ ९॥

पार्वती कमला राधा सावित्री देवसूरपि ।
वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥ १०॥

वयं किं स्तवनं कूर्मः स्त्रियः प्राणेश्वरेश्वर ।
प्रसन्नो भव नो देव दीनबन्धो कृपां कुरु ॥ ११॥

इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे ।

अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥ १२॥

विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् ।
स गतिं विप्रपत्नीनां लभते नाऽत्र संशयः ॥ १३॥

॥ इति श्रीब्रह्मवैवर्ते विप्रपत्नीकृतं श्रीकृष्णस्तोत्रं समाप्तम् ॥

॥ श्रीकृष्णस्तोत्रं ब्रह्मवैवर्तपुराणे शम्भुकृतम् ॥

महादेव उवाच ।

जयस्वरूपं जयदं जयेशं जयकारणम् ।
प्रवरं जयदानां च वन्दे तमपराजितम् ॥ १॥

विश्वं विश्वेश्वरेशं च विश्वेशं विश्वकारणम् ।
विश्वाधारं च विश्वस्थं विश्वकारणकारणम् ॥ २॥

विश्वरक्षाकारणं च विश्वघ्नं विश्वजं परम् ।
फलबीजं फलाधारं फलं च तत्फलप्रदम् ॥ ३॥

तेजःस्वरूपं तेजोदं सर्वतेजस्विनां वरम् ।
इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे ।
नारायणं च संभाष्य उवास स तदाज्ञया ॥ ४॥

इति शंभुकृतं स्तोत्रं यो जनः संयतः पठेत् ।
सर्वसिद्धिर्भवेत्तस्य विजयं च पदे पदे ॥ ५॥

संततं वर्धते मित्रं धनमैश्वर्यमेव च ।
शत्रुसैन्यं क्षयं याति दुःखानि दुरितानि च ॥ ६॥

इति ब्रह्मावैवर्ते शम्भुकृतं श्रीकृष्णस्तोत्रम् ।

॥ श्रीकृष्णस्तोत्रं ब्रह्मवैवर्तपुराणे सरस्वतीकृतम् ॥

सरस्वत्युवाच ।

रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् ।
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् ॥ १॥

रासेश्वरं ऱासकरं वरं ऱासेश्वरीश्वरम् ।
ऱसाधिष्ठातृदेवं च वन्दे ऱासविनोदिनम् ॥ २॥

रासायासपरिश्रान्तं रासरासविहारिणम् ।
रासोत्सुकानां गोपीनां कान्तं शान्तं मनोहरम् ॥ ३॥

प्रणम्य च तमित्युक्त्वा प्रहृष्टवदना सती ।
उवास सा सकामा च रत्नसिंहासने वरे ॥ ४॥

इति वाणीकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
बुद्धिमान्धनवान्सोऽपि विद्यावान्पुत्रवान्सदा ॥ ५॥

इति ब्रह्मावैवर्ते सरस्वतीकृतं श्रीकृष्णस्तोत्रम् ।